॥ एकदन्तशरणागतिस्तोत्रम् ॥

श्रीगणेशाय नमः ।
देवर्षय ऊचुः ।
सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिन्त्यबोधम् ।
अनादिमध्यान्तविहीनमेकं तमेकदन्तं शरणं व्रजामः ॥ १॥

अनन्तचिद्रूपमयं गणेशमभेदभेदादिविहीनमाद्यम् ।
हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ॥ २॥

समाधिसंस्थं हृदि योगिनां यं प्रकाशरूपेण विभातमेतम् ।
सदा निरालम्बसमाधिगम्यं तमेकदन्तं शरणं व्रजामः ॥ ३॥

स्वबिम्बभावेन विलासयुक्तां प्रत्यक्षमायां विविधस्वरूपाम् ।
स्ववीर्यकं तत्र ददाति यो वै तमेकदन्तं शरणं व्रजामः ॥ ४॥

त्वदीयवीर्येण समर्थभूतस्वमायया संरचितं च विश्वम् ।
तुरीयकं ह्यात्मप्रतीतिसंज्ञं तमेकदन्तं शरणं व्रजामः ॥ ५॥

स्वदीयसत्ताधरमेकदन्तं गुणेश्वरं यं गुणबोधितारम् ।
भजन्तमत्यन्तमजं त्रिसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ६॥

ततस्वया प्रेरितनादकेन सुषुप्तिसंज्ञं रचितं जगद्वै ।
समानरूपं ह्युभयत्रसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ७॥

तदेव विश्वं कृपया प्रभूतं द्विभावमादौ तमसा विभान्तम् ।
अनेकरूपं च तथैकभूतं तमेकदन्तं शरणं व्रजामः ॥ ८॥

ततस्त्वया प्रेरितकेन सृष्टं बभूव सूक्ष्मं जगदेकसंस्थम् ।
सुसात्विकं स्वप्नमनन्तमाद्यं तमेकदन्तं शरण व्रजामः ॥ ९॥

तदेव स्वप्नं तपसा गणेश सुसिद्धरूपं विविधं बभूव ।
सदैकरूपं कृपया च तेऽद्य तमेकदन्तं शरणं व्रजामः ॥ १०॥

त्वदाज्ञया तेन त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।
विभिन्नजाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ॥ ११॥

तदेव जाग्रद्रजसा विभातं विलोकितं त्वत्कृपया स्मृतेन ।

बभूव भिन्नं च सदैकरूपं तमेकदन्तं शरणं व्रजामः ॥ १२॥

सदेव सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।
धियः प्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ॥ १३॥

त्वदाज्ञया भान्ति ग्रहाश्च सर्वे  प्रकाशरूपाणि विभान्ति खे वै ॥

भ्रमन्ति नित्यं स्वविहारकार्यास्तमेकदन्तं शरणं व्रजामः ॥ १४॥

त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः ।
त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ॥ १५॥

यदाज्ञया भूमिजलेऽत्र संस्थे यदाज्ञयापः प्रवहन्ति नद्यः ।
स्वतीर्थसंस्थश्च कृतः समुद्रस्तमेकदन्तं शरणं व्रजामः॥ १६॥

यदाज्ञया देवगणा दिविस्था ददन्ति वै कर्मफलानि नित्यम् ।
यदाज्ञया शैलगणाः स्थिरा वै तमेकदन्तं शरणं व्रजामः ॥ १७॥

यदाज्ञया शेषधराधरो वै यदाज्ञया मोहप्रदश्च कामः ।
यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ॥ १८॥

यदाज्ञया वाति विभाति वायुर्यदाज्ञयाग्निर्जठरादिसंस्थः ।
यदाज्ञयेदं सचराचरं च तमेकदन्तं शरणं व्रजामः ॥ १९॥

यदन्तरे संस्थितमेकदन्तस्तदाज्ञया सर्वमिदं विभाति ।
अनन्तरूपं हृदि बोधकं यस्तमेकदन्तं शरणं व्रजामः ॥ २०॥

सुयोगिनो योगबलेन साध्यं प्रकुर्वते कः स्तवनेन स्तौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥ २१॥

गृत्समद उवाच ।
एवं स्तुत्वा गणेशानं देवाः समुनयः प्रभुम् ॥

तूष्णीम्भावं प्रपद्यैव ननृतुर्हर्षसंयुताः ॥ २२॥

स तानुवाच प्रीतात्मा देवर्षीणां स्तवेन वै ॥

एकदन्तो महाभागो देवर्षीन् भक्तवत्सलः ॥ २३॥

एकदन्त उवाच ।
स्तोत्रेणाऽहं प्रसन्नोऽस्मि सुराः सर्षिगणाः किल ।
वरदं भो वृणुत वो दास्यामि मनसीप्सितम् ॥ २४॥

भवत्कृतं मदीयं यत्स्तोत्रं प्रीतिप्रदं च तत् ।
भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ॥ २५॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ।
पुत्रपौत्रादिकं सर्वं कलत्रं धनधान्यकम् ॥ २६ ।
गजाश्वादिकमत्यन्तं राज्यभोगादिकं ध्रुवम् ।
भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ॥ २७॥

मारणोच्चाटनादीनि राज्यबन्धादिकं च यत् ।
पठतां शृण्वतां नृणां भवेच्च बन्धहीनताम् ॥ २८॥

एकविंशतिवारं यः श्लोकानेवैकविंशतीन् ।
पठेच्च हृदि मां स्मृत्वा दिनानि त्वेकविंशतिः ॥ २९॥

न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु वै भवेत् ।
असाध्यं साधयेन्मर्त्यः सर्वत्र विजयी भवेत् ॥ ३०॥

नित्यं यः पठति स्तोत्रं ब्रह्मभूतः स वै नरः ।
तस्य दर्शनतः सर्वे देवाः पूता भवन्ति च ॥ ३१॥

इति श्रीमुद्गलपुराणे एकदन्तशरणागतिस्तोत्रं सम्पूर्णम् ।